॥ श्रीगुर्वाष्टोत्तरशतनामस्तोत्रम् ॥

गुरु बीज मन्त्र - ॐ ग्राँ ग्रीं ग्रौं सः गुरवे नमः ॥

गुरुर्गुणवरो गोप्ता गोचरो गोपतिप्रियः ।
गुणी गुणवतांश्रेष्ठो गुरूणाङ्गुरुरव्ययः ॥ १॥

जेता जयन्तो जयदो जीवोऽनन्तो जयावहः ।
आङ्गीरसोऽध्वरासक्तो विविक्तोऽध्वरकृत्परः ॥ २॥

वाचस्पतिर् वशी वश्यो वरिष्ठो वाग्विचक्षणः ।
चित्तशुद्धिकरः श्रीमान् चैत्रः चित्रशिखण्डिजः ॥ ३॥

बृहद्रथो बृहद्भानुर्बृहस्पतिरभीष्टदः ।
सुराचार्यः सुराराध्यः सुरकार्यहितंकरः ॥ ४॥

गीर्वाणपोषको धन्यो गीष्पतिर्गिरिशोऽनघः ।
धीवरो धिषणो दिव्यभूषणो देवपूजितः ॥ ५॥

धनुर्धरो दैत्यहन्ता दयासारो दयाकरः ।
दारिद्र्यनाशको धन्यो दक्षिणायनसम्भवः ॥ ६॥

धनुर्मीनाधिपो देवो धनुर्बाणधरो हरिः ।
आङ्गीरसाब्दसञ्जातो आङ्गीरसकुलसम्भवः ॥ ७ ॥ var आङ्गीरसकुलोद्भवः
सिन्धुदेशाधिपो धीमान् स्वर्णवर्णः चतुर्भुजः । var स्वर्णकश्च
हेमाङ्गदो हेमवपुर्हेमभूषणभूषितः ॥ ८॥

पुष्यनाथः पुष्यरागमणिमण्डलमण्डितः ।
काशपुष्पसमानाभः कलिदोषनिवारकः ॥ ९॥

इन्द्रादिदेवोदेवेषो देवताभीष्टदायकः ।
असमानबलः सत्त्वगुणसम्पद्विभासुरः ॥ १०॥

भूसुराभीष्टदो भूरियशः पुण्यविवर्धनः ।
धर्मरूपो धनाध्यक्षो धनदो धर्मपालनः ॥ ११॥

सर्ववेदार्थतत्त्वज्ञः सर्वापद्विनिवारकः ।
सर्वपापप्रशमनः स्वमतानुगतामरः ॥ १२॥

var  स्वमातानुगतामरः, स्वमातानुगतावरः

ऋग्वेदपारगो ऋक्षराशिमार्गप्रचारकः ।
सदानन्दः सत्यसन्धः सत्यसंकल्पमानसः ॥ १३॥

सर्वागमज्ञः सर्वज्ञः सर्ववेदान्तविद्वरः ।
ब्रह्मपुत्रो ब्राह्मणेशो ब्रह्मविद्याविशारदः ॥ १४॥

समानाधिकनिर्मुक्तः सर्वलोकवशंवदः ।
ससुरासुरगन्धर्ववन्दितः सत्यभाषणः ॥ १५॥

नमः सुरेन्द्रवन्द्याय देवाचार्याय ते नमः ।
नमस्तेऽनन्तसामर्थ्य वेदसिद्धान्तपारगः ॥ १६॥

सदानन्द नमस्तेस्तु नमः पीडाहराय च ।
नमो वाचस्पते तुभ्यं नमस्ते पीतवाससे ॥ १७॥

नमोऽद्वितीयरूपाय लम्बकूर्चाय ते नमः ।
नमः प्रकृष्टनेत्राय विप्राणाम्पतये नमः ॥ १८॥

नमो भार्गवषिष्याय विपन्नहितकारिणे ।
नमस्ते सुरसैन्यानांविपत्छिद्रानकेतवे ॥ १९॥

बृहस्पतिः सुराचार्यो दयावान् शुभलक्षणः ।
लोकत्रयगुरुः श्रीमान् सर्वगः सर्वतोविभुः ॥ २०॥

सर्वेशः सर्वदातुष्टः सर्वदः सर्वपूजितः ।
अक्रोधनो मुनिश्रेष्ठो दीप्तिकर्ता जगत्पिता ॥ २१॥

विश्वात्मा विश्वकर्ता च विश्वयोनिरयोनिजः ।
भूर्भुवोधनदासाजभक्ताजीवो महाबलः ॥ २२॥

बृहस्पतिः काष्यपेयो दयावान् षुभलक्षणः ।
अभीष्टफलदः श्रीमान् सुभद्रर नमोस्तु ते ॥ २३॥

बृहस्पतिस्सुराचार्यो देवासुरसुपूजितः ।
आचार्योदानवारिष्ट सुरमन्त्री पुरोहितः ॥ २४॥

कालज्ञः कालऋग्वेत्ता चित्तदश्च प्रजापतिः ।

विष्णुः कृष्णः सदासूक्ष्मः प्रतिदेवोज्ज्वलग्रहः ॥ २५॥

॥ इति गुर्वाष्टोत्तरशतनामस्तोत्रम् सम्पूर्णम् ॥